## ॥ अथ षष्ठोऽङ्कः ॥

—ः-०-ः—

ततः प्रविशतो रामलक्ष्मणौ ।

रामः । सौमित्रे ! ननु सेव्यतां तरुतलं चण्डांशुरुज्जृम्भते ।

लक्ष्मणः । चण्डांशोर्निशि का कथा रघुपते ! चन्द्रोऽयमुन्मीलति ।

रामः । वत्सैतद् विदितं कथन्नु भवता ?

लक्ष्मणः । धत्ते कुरङ्गं यतः ।

रामः । क्वासि प्रेयसि ! हा ! कुरङ्गनयने ! चन्द्रानने जानकि ?

[पुनर्विलोक्य] हन्त ! सन्तापेन प्रतारितोऽस्मि । कथमयं गगनतलाधिरोही रोहिणीहृदयनन्दनश्चन्द्रः । [चन्द्रं प्रति]

रजनिकर ! करास्ते बान्धवाः कैरवाणां
सकलभुवनचेष्टाजागरूका जयन्ति
न कथयसि कथं तत् कुत्र सा जानकी मे
त्वमसि मृगसहायः किन्नु नक्तंचरोऽसि ॥

लक्ष्मणः । [ स्वगतं ] कथमयमभिषङ्गतरङ्गस्तरलीकरोत्यार्यमानसं तदन्यतो नयामि [ प्रकाशम् ] आर्यायमितो विलोकयतां चपलचञ्चुपुटाचान्तशीतकरशीकरश्चकोरः ।

रामः । [चकोरं प्रति]

तन्मे विदेहतनयावदनं निवेद्य
भ्रातश्चकोर ! कुरु मां चरितार्थवृत्तिम्।
पीता यदीयकमनीयकपोलकान्तिः
कान्तासखेन भवता शशिनं विहाय ॥

लक्ष्मणः । आर्येयमितो विलोक्यतां शरत्काशा निशाकरकिरणानुकारितरङ्गा तरङ्गिणी ।

रामः । [विलोक्य]

कल्लोलिनि ! त्वमिव सापि कुरङ्गनेत्रा
नूनं किमप्यनुदिनं कृशिमानमेति ।
एतावदस्ति भवतीह निसर्गशीता
सीता पुनर्वहति काम‌पि तापमुग्राम् ॥

लक्ष्मणः । इतो विलोक्यतामनिद्रनीलनलिनीवनविलीनोऽयमलिनीनाथः ।

रामः । [विलोक्य] अये कोऽयं विहङ्गः ?

उन्मीलन्नयनान्तकान्तिलहरीनिर्धौतयोः केवला
दामोदादवधारणीयवपुषो कान्तासखेन क्षणम् ।
यत्कर्णोत्पलयोः स्थितेन भवता किंचित् समुद्गुञ्जितं
भ्रातस्तिष्ठति कुत्र तत् कथय मे कान्तं प्रियाया मुखम् ॥

लक्ष्मणः। [सातङ्कम्] अपीमं न विलोकयेदार्यः ।

रामः । [विलोक्य] अये कोऽयं विहङ्गः ?

योऽयं बहिः कलितकुङ्कुमरेणुराग-
मन्तस्तु संभृतदयं हृदयं दधानः ।

परितरङ्गिणि मुहुः करुणं रटन्ती-
मालोकते सहचरीं न तु संनिधत्ते ॥

[विमृश्य] नूनमयं वल्लभाविरहविदारितहृदयो वराकश्चक्रवाकः।

लक्ष्मणः। अहो! प्रमादः।

रामः। नूनमयमेकः समदुःखतया समानशीलो मे। अथवा कुतोऽस्य मम च समानशीलता।

अयमुदयति चन्द्रे विप्रयोगं प्रियाया:
अयति तपति सूर्ये सङ्गमङ्गीकरोति।
मम तु जनकपुत्रीविप्रयुक्तस्य यातं
शतमधिकमपीदं चन्द्रसूर्योदयानाम् ॥

लक्ष्मणः। आर्येह तावत् मुकुलितकमलिनीपरिसरानुसारिणि कलहंसे दीयतां दृष्टिः।

रामः। [विलोक्य]

निजनखशिखालेखालीढस्फुरत्कमलस्तनीं
विरलमधुपश्रेणीगोतां चलन् कलहंसकः।
अकरुणशशिप्रेङ्खत्पादप्रहारविमूर्छिता-
महह। नलिनीं क्लान्तक्लान्तां मुहुर्मुहुरीक्षते ॥

[विमृश्य] वरमेवंविधानामपि सहचरीजनानुकम्पया कोमलं चेतो न तु निसर्गकठिनस्य रामस्य ॥

लक्ष्मणः। [स्वगतम्] कथमिदानीमप्यस्य चेतसि जानकीयमिन्द्रजालमुन्मीलति।

[नेपथ्ये] सखे रत्नशेखर! चिराद् दृश्यसे।

लक्ष्मणः। [आकर्ण्य] किमेतत्?

[पुनर्नेपथ्ये] वयस्य! चम्पकापीडैवमेतत्। मया हीयन्तं समयमखिलमायानिधेर्मयनाम्नो दानवस्य पुत्रीं निजमहोदरीं मन्दोदरीमनुवर्त्तितुं लङ्कायां कृतालयात् चित्ररूपनाम्नो दानवात् सकलमिन्द्रजालकलामाददानेन स्थितम्।

लक्ष्मणः। नूनमयं कृतकर्णकौतुकामोदः कयोरपि विद्याधरयोः संवादः।

[पुनर्नेपथ्ये] सखे रत्नशेखर! तन् मे धारयसि निजकलादर्शनमिति।

[पुनर्नेपथ्ये] वयस्य चम्पकापीड!

असुरसुरनिशाचरोरगाणा-
मपि नरकिन्नरसिद्धचारणानाम्।
सकलजनविलोकनैकचित्रं
स्फुटमिह वास्य विजृम्भते चरित्रम्॥

अथवा किमन्येन। लङ्कानुभूतमेव नूतनं किमपि सरसरमणीयं चरितमुपदर्शयामि ते।

लक्ष्मणः। आर्य्यैतोऽवधार्यतां नन्विदमयत्नोपनीतं प्रेक्षणीयम्।

रामः। [अनाकर्णितकेन]

देवि! त्वदीयमणिनूपुरजृम्भमाण
कोलाहलोत्तरलहंसकुलाकुलासु।

वैदेहि! लक्ष्मणपदाम्बुजलाञ्छितासु
गोदावरीपुलिनभूमिषु देहि दृष्टिम्॥

लक्ष्मणः। क्व पुनरिह वैदेही क्व वा गोदावरी?

रामः। [विमृश्य] कथं प्रतारितोऽस्मि प्रतिविभ्रमेण। [विचिन्त्य] अथवा कृतार्थीकृतोऽस्मि। अनेन हि मे।

गोदावरीतीरतपोवनेषु
सौमित्रिसीतापरिपूर्णपार्श्वः।
दृष्टा निमेषानिव यान्यनैषं
दिनानि तान्येव पुनः स्मृतानि॥

पुनः समस्त्यागम्। अपि नाम।

तान्येव पक्ष्मलदृशो वचनामृतानि
भूयोऽपि कर्णपुटकैरहमापिबेयम्।
यैर्भोगदर्शयरसो विकचप्रमोदा
गोदावरीकमलवीचिविचेष्टितानि॥

[नेपथ्ये] तुह सुहअ उक्खिवन्ती तरङ्गसिअचामरं रहुमिअङ्क।
धवलकमलादवत्तं धारइ गोलाणई सहत्थेण*॥

रामः। [सहर्षम्]। अये स एवायं प्रियतमायाः समालापः। तथाहि—

परिमितकमनीयः कोमलो वाग्विलासः
सरसमधुरकाकुस्वीकृता कापि लेखा।

---

*तव सुभग उत्क्षिपन्ती तरङ्गसितचामरं रघुमृगाङ्क।
धवलकमलातपत्रं धारयति गोदा नदी स्वहस्तेन॥

ध्वनिरपि च विपञ्चीपञ्चमस्यानुवादी
श्रुतिरपि कलकण्ठीकण्ठसंवादभूमिः ॥

तत् कुत्र पुनः प्रेयसी ? [विलोक्य] तत् कथमयमदृष्टचन्द्रलेखश्चन्द्रालोकः । [ततः प्रविशति यथा निरूपयिष्यमाणा जानकी ]

रामः । [ससंभ्रमम्] प्रिये ! प्राप्तासीति गन्तुमिच्छति ।

लक्ष्मणः । [रामं हस्ते धृत्वा] अलमिह संभ्रमेण? विद्याधरोपनीतमिन्द्रजालकं खल्वेतत् ।

रामः । [निर्वर्ण्य] अये क एष संनिवेशविशेषः? तथाहि

एकेनालम्बितेयं शिथिलभुजलताशोभिना शाखिशाखा
हस्तेनान्येन चायं दिनकरकिरणक्लान्तकान्तिः कपोलः
एष स्रस्तो नितम्बे लुलति कुचभरस्यक्तकाञ्चीकलापे
नेत्रोत्सङ्गे च बाष्पस्तवकनवकणैः पक्ष्मला पक्ष्मलेखा ॥

नूनमियमशोकशाखिशाखां सखीमिवावलम्ब्य निद्रामुपागता । तथाहि—

आमीलन्नवनीलनीरजतुलामालम्बते लोचनं
शैथिल्यं नवमल्लिकासहचरैरङ्गैरपि स्वीकृतम् ।

[पुनर्विमृश्य] नूनमनया हृदयप्रमोददायी कोऽपि स्वप्नो दृष्टः । तथाहि ।

आलापादधरः स्फुरत् कलयति प्रेङ्खत्प्रवालोपमा
मानन्दप्रभवाय बाष्पकणिका मुक्ताश्रियं बिभ्रति ॥

सीता । [उन्मील्य लोचने] हद्धिहद्धि अणारिसो मे जो-

अलोओ जीअलोओ, कहिं सा णीलुप्पलसामलो कहिं रामो लक्खा कहिं कहिं वा हद्धि रामेक्कजीविदा सीदेति मुर्च्छति* ।

रामः। अयि वसुधे !

यां वै गर्भे त्रिजगदबलारत्नभूतां दधाना
लब्धार्थत्वात् जगति भवती रत्नगर्भा बभूव ।
तामुत्सङ्गे तव विलुलितां वीक्षमाणा च सीतां
द्राग् दीर्णासीन् न कथमथवा देवि! सर्वंसहासि ॥

तदेनामभ्यर्थयामि तावदस्याः समुद्बोधनाय। अथवा किमभ्यर्थनया।

निजामपि सुतां सीतां नेयमुद्बोधयिष्यति।
निजेऽप्यपत्ये करुणा कठिनप्रकृतेः कुतः ॥

तदेनं तावदभ्यर्थयामि।

स्निग्धाशोकद्रुम! निजसखीं तूर्णमुद्बोधयैनां
सिक्तासिक्ता किसलयकरस्यंसिना सीकरेण।
एतस्याः किं नयनकमलस्यन्दिभिः सान्द्रसान्द्रै-
र्बाष्पोत्पीडैरनुदिनमपि त्वं न सिक्तालवालः ॥

कथमनाकर्णितकेन प्रत्याख्यातमनेन। अये! कृतघ्नता पलाशिनः। [विलोक्य] कथं प्रकृतिप्रियंवदाया मे प्रियायाः सखीजनोऽस्मि न कश्चिदिह।

---

* हा धिक् हा धिक् अन्यादृशो मे जीवलोको मीढ़ामहो क्व सा नीलोत्पलश्यामलः क रामो लक्ष्मा क क वाहा धिक् रामैकजीविता सीतेति।

[प्रविश्य] त्रिजटा। जानकि। समाश्वसिहि समाश्वसिहि।

सीता। [समाश्वस्य] कहं पिअसही मे तिअडा *।

त्रिजटा। सखनया ते मधुरया मुखरेखया तर्कयामि यत् किल प्रियं किमपि दृष्टवती भवती।

सीता। अत्थि दाणिं हि मए सिविणअम्मि सअं गीलाएइए सहत्थकलिदतरङ्गचामरधवलकमलादवत्ताए परिघरिज्जन्तो अज्जउत्तो दिठ्ठी †।

त्रिजटा। तर्हि वर्धसे सुखस्वप्नः खल्वसौ।

सीता। केरिसो मे रामेकचित्ताए सिविणअम्मि विस्सासो ‡

त्रिजटा। तत् किं चिन्तास्वप्न इति संभावयसि। नहि। चिन्तास्वप्नोऽपि नैवमचुम्बितावगाही भवति।

सीता। किं उण अचुम्बिदम् ¶।

त्रिजटा। यत् न संभाव्यते।

सीता। जं खु संभावीअदि तंपि हला अत्थि अत्त लोअम्मि।
जं जीवइ जणअसुदा अपुलोअन्तोवि रामचन्दमुहम्॥ §

---

* कथं प्रियसखी मे त्रिजटा।

† अस्तीदानीं हि मया स्वयं गीदानद्या स्वहस्तकलिततरङ्ग चामरधवलकमलातपत्रया परिचर्यमाण आर्यपुत्रोदृष्टः।

‡ कीदृशो मे रामैकचित्तायाः स्वप्ने विश्वासः ?

¶ किं पुनरचुम्बितम्।

§ यत् न खलु संभाव्यते तदपि हला अस्त्यत्र लोके।
यत् जीवति जनकसुता अनालोकयन्त्यपि रामचन्द्रमुखम्॥

ता किं इमिणा सिविणएण जीविदेण वा उवेक्खिदह्मि अज्जउत्तेण * ।

रामः । शान्तं पापम् । अयि प्रिये ! हृदयस्थितापि मे कथमजानती वर्तसे हृदयवृत्तिम् ।

सीता । अथवा किंति हरमुउडमिअंके कलंङ्कमारोपयिस्सम् । जाणामि अज्जउत्तो अज्जवि अकलिदउत्तन्तो मे † ।

रामः । प्रिये ! इदानीमुचितमनुसंदधासि ।

सीता । [विस्मय] कहं ?

वाआलेणवि कहिदा णादं णाहस्स णिउररवेण ।
अहवा विहिविहुरबलात् तेणवि मूअत्तणं पत्तम् ॥‡

[नेपथ्ये] अये! लङ्कानिवासिनः ! सावधानमवस्थीयतां मित्यतः ।

प्राकारमुन्नतमसीमबलो विलङ्घ्य
लङ्कामयं विशति कोऽपि कपिप्रवीरः ।
[उभे आकर्ण्य त्रासं नाटयतः]

* तत् किमनेन स्वप्नेन जीवितेन वा उपेक्षिताऽस्म्यार्यपुत्रेण ।

† अथवा किमिति हरमुकुटमृगाङ्के कलङ्कमारोपयिष्ये जानाम्यार्यपुत्रोऽद्याप्य-कलितवृत्तान्तो मे ।

‡ कथम् ?—वाचालेनापि कथिता नाहं नाथस्य नूपुररवेण ।
अथवा विधिविधुरबलात्तेनापि मूकत्वं प्राप्तम् ॥

[पुनर्नेपथ्ये] तमसुखं प्रचलति स्वयमग्रतामा
मन्येव राक्षसपतेः कुपितः कुमारः ॥

सीता। कहं उण सह महोअरेण वेअरिव्व असोअवणम् * ।

त्रिजटा। [विमृश्य)

तुहिनकरमयूखैर्दीप्तकन्दर्पदर्प-
स्तपनकुलवधूटीं त्वामयं मुक्तलज्जः ।
अयमयमनुनेतुं रामचन्द्रैकचित्ता-
मपि स विपिनवीथीमेति लङ्काधिनाथः ॥

सीता। [त्रासं नाटयति। ततः प्रविशति रावणः। सीता पराङ्मुखी तिष्ठति ]

रावणः। अयि जानकि !

कन्दर्पज्वरवेदनापरिपतद्बाष्पस्रुतिक्षालितं
स्वर्गस्त्रीकुचकुम्भकुङ्कुमरजस्तेयापराधोज्ज्वलम् ।
एतत् त्वां सुरदन्तिदन्तशिखरोल्लेखाङ्कविख्यापित-
प्रस्फुर्जच्चतुरन्तविश्वविजयं वक्षस्थलं याचते ॥

सीता। [ अनाकर्णितकेन ] अवि णाम पुणोवि रामचन्दमुहचन्दं पुलोअइस्सम् † ।

त्रिजटा। जानकि ! एवं प्रलापिनि लङ्केश्वरे कर्णावधानमपि तावत् देहि—

* कथं पुनः सह महीधरेण वेयत इवाशोकवनम् ।

† अपि नाम पुनरपि रामचन्द्रमुखचन्द्रं विलोकयिष्ये ।

रामः । साधु त्रिजटे ! प्रलाप इत्युत्प्रेक्षयसि ।

रावणः । यत् सन्तुष्टवतः पुरा पुरभिदस्कन्दोत्सवच्छेदिनो
न क्रोधादनमन्नवोन्नतशिरःश्रेणी नमन्त्यामपि ।
एतत् तद् दशमं शिरो मम नमत्यत्पादपाथोजयो
रव्याजं मिथिलेन्द्रपुत्रि ! भवतीं प्रेमातुरं याचते॥

सीता । [ संस्कृतमाश्रित्य ]

निजे पाणौ कृत्वा वकुललतिका बालमुकुलं
ययोश्चक्रे गुञ्जन्मधुपमवतंसं रघुपतिः ।
अपीमौ कर्णौ मे वचनमिदमाकर्ण्य न कथं
विशीर्णौ युक्तं वा चरितमिदमन्तःकुटिलयोः ॥

रावणः । अयि जानक्यवलोकनमात्रेणापि तावन् मां संभावय ।

सीता । अपि निशाचरैतावत्प्रार्थनाभङ्गलाघवात् कथं राघवादपि न बिभेषि ?

रावणः । अये ! क एष राघवो नाम यं किन्जनो राम इति जल्पति । [विहस्य]

कामः कियानसिलतानिहितैकबाहु-
क्रीडार्दितत्रिभुवनस्य दशाननस्य ।
रामस्तु केवलमयं सुमुखि ! त्वदर्थे
मां हन्ति हन्त ! न चिरान् निशितैः शरौघैः ॥

सीता । सत्यमेतत् ।

रावणः । (स्वगतम्) कथमन्यदेव किमप्युक्तवानस्मि

तदेव विपरीतं पठित्वापि जानकि! तावत् मां जीवय नयनामृतेन।

सीता। तदा त्वामपि लङ्केश! विलोकयिष्यति जानकी।

रावणः। सप्रत्याशं तत् कथय समयं। अयं हि।

मन्दोदरीमपि विमुञ्चति राज्यमेत-
दप्युन्मदं तव पदाब्जतले करोति।
किं जल्पितेन बहुना सुमुखि! त्वदर्थे
स्वान्युच्छिनत्यपि शिरांसि पुनर्दशास्यः॥

सीता। अपि खद्योतभासापि समुन्मीलति पद्मिनी?

रावणः। [सक्रोधम्] आः पापे! यावत् किल तपन-खद्योतयोस्तावदेवान्तरं राम-रावणयोः। यद् ब्रूयं हन्यस इति [खड्गमुत्पाटयति]

रामः। हा जानकि! त्वमधुनासि कथं भवित्री
[सविचिकित्सम्] धिग् दैवतं तव सुदारुण एष पाकः।
[सक्रोधम्] आः पाप राक्षसकुलाधम! संहृतोऽसि
[ससंभ्रमम्] हे वत्स लक्ष्मण! धनुर्धनुरेष कालः॥

लक्ष्मणः। आर्य! किमिदमैन्द्रजालिकविलोकनादलीकमेव संभ्रम्यते।

रावणः। अयि! जानक्ययमसावुदीर्णकरालकरवालः कालभुजङ्गः। तदिदानीमपि दशकण्ठभुजाश्लेषभेषजमनुजानीहि।

सीता। विरमविरम रक्षः! किं मुधा अध्यवसितेन

स्पृशति नहि मदीयं कण्ठसीमानमन्यः।

रघुपतिभुजदण्डादुत्पलश्यामकान्तेः

र्दशमुख! भवदीयान् निष्कृपाद्वा कृपाणात्॥

रावणः। किमतः परं कालक्षेपेण। तदहमिदानीमस्याः कण्ठरुधिरेण कालिकामर्चयामीति खड्गधारां परामृशति।

रामः। अहह!

विधिरकरुणः स्फीतंस्फीतं तमः परिजृम्भते

जलधिसलिले मग्नं विश्वं परिवर्त्तते।

कुवलयदलस्रक्संश्लेषोत्सवैकपदे पदं

तदयमदयः सीताकण्ठे करोति कृपाणकः॥

[पुनर्विभाव्य] हन्त भोः!

चान्द्रीं लेखां दशति दशनैर्दारुणः सैंहिकेयो

नव्यां वल्लीं दवदहनकश्चान्दनीं दन्दहीति।

अपुण्यात्तः कुवलयमयीं मालिकामालुनीते

मूलादुन्मूलयति नलिनीं दुष्टहस्ती करेण॥

सीता। चन्द्रहास! हर मे परितापं

रामचन्द्रविरहानलजातम्।

त्वं हि कान्तिजितमौक्तिकचूर्णै

र्धारया वहसि शीतलमम्भः॥

रावणः। कः कोऽत्र भोः? सत्वरं मम करे कपालपात्रमर्पतां येनास्याः कण्ठरुधिरं प्रतीच्छामीत्यशोकविटपान्त-

राले इस्तं प्रसार्य कथं न्यस्तमेव मम करतले कपालम्। [विलोक्य, सचमत्कारम्] अये! न कपालमेतत्। किन्त्वशस्त्रच्छिन्नं शिरएव कस्यापि। [विमृश्य] कस्य पुनरिदम्? नूनमक्षकुमारस्येति [मूर्च्छितः पतति]

त्रिजटा। अयि लङ्केश्वर! समाश्वसिहि समाश्वसिहि।

रावणः। [समाश्वस्य] नूनमिदं तस्य दुष्टकपेर्विजृम्भितम्। तेन तमेव तावदग्रतः पातयामीति निष्क्रान्तः।

रामलक्ष्मणौ। [सहर्षम्] अहो! संविधानवैदग्ध्यी।

त्रिजटा। [सीतामालिङ्ग्य] सखि! पुण्येन जीवितासि।

सीता। अपुस्सेणेति भणिज्ज *।

त्रिजटा। कथमिव?

सीता। कहं उण तं अपुस्सं ण होइ जं किर रामचन्दविरहतावणिव्वापणीए चन्दहासधाराए उवेक्खिवदह्मि। ता किं इमिणा जीविदेण इह दारुसंचअम्मि अग्गिं पज्जालेहि जत्थ इमाइं अङ्गाइं सीअलअम्मि †।

त्रिजटा। शान्तं पापं। नन्वचिरादेव निजाङ्ककानाम्।

हिमकरकिरणकरम्बितमरकतमयपीनपट्टकप्रतिमे!।
मलयजपरागरजसि रामोरसि तापमपहरसि॥

---

* अपुण्येनेति भण।

† कथं पुनस्तत् अपुण्यं न भवति? यत् किल रामचन्द्रविरहतापनिर्वापण्या चन्द्रहासधारया उपेक्षितास्मि, तत् किमनेन जीवितेन इह दारुसंचयेऽग्निं प्रज्वालय यत्रेमान्यङ्गानि शीतलयामि।

सीता। हला किं इमिणा अलीअजम्पिदेण। सव्वं जेव्व अणलपवेसेण विवसिदह्मि ता उवणेहि मे अङ्गारखण्डअं *।

रामः। हन्त भोः! कथमपि शार्दूलमुखान् मुक्तायाः पुनरपि शबरवागुरामवतीर्णायाः कुरङ्गवध्वाभङ्गीमङ्गीकृतवती जानकी।

त्रिजटा। (निर्गत्य प्रविश्य च) सुलभानलोऽयं प्रदेशः।

रामः। [सहर्षम्] त्रिजटे! दिष्ट्या रक्षितस्त्वया रामः।

सीता। संस्कृतमाश्रित्याशोकं प्रति।

अलमकरुणं चेतः श्रीमन्नशोकवनस्पते!
दहनकणिकामेकां तावत् मम प्रकटीकुरु।
ननु विरहिणां संतापाय स्फुटीकुरुते भवान्
नवकिसलयश्रेणीव्याजात् कृशानुशिखावलिम्॥

[विलोक्य सहर्षम्] हला पेक्खपेक्ख निवडिदं दाव इमस्स सिहराहो अङ्गारखण्डअं †। [इत्युपसृत्य ग्रहीतुमिच्छति]

रामः। अये! कथमशोकोऽपि ममायं शोकतां गतः?

लक्ष्मणः। आर्यानुपपन्नमिदं यत् किल तरुशिखरमङ्गारखण्डकमुद्गिरति।

* हला! किमनेनालीकजल्पितेन सर्वमेवानलप्रवेशेन व्यवसितास्मि। तदुपनय मेऽङ्गारखण्डकम्।

† हला! पश्यपश्य निपतितं तावदस्य शिखरादङ्गारखण्डकम्।

राम:। किं न संपादयेत् वत्स! रामस्य विधिर्वैधुरी।

सीता। अङ्गारखण्डं हस्तेनादत्ते।

राम:। अनल! नलिनकोमले करेऽस्या:

स्फुरदरुणोत्पलकुड्मलोपम: स्या:।

[विमृश्य] चरितमुचितमस्ति वा कुतस्ते

ननु भुवने विदितोऽसि कृष्णवर्त्मा॥

सीता। [हस्ते गृहीत्वा, सविषादम्] कहं मह अनुसेण अग्गीवि सीअलो संवुत्तो। [निपुणं निरूप्य, सचमत्कारम्] अये अङ्गालखण्डअं ण हु एदं अवि उण पम्मराअरअणखण्डअम् *।

त्रिजटा। अये! पुण्यव्रतामग्निरेव रत्नं भवतीति प्रवाद: सत्य एव संवृत्त:।

सीता। [पुनर्विलोक्य] कहं सा इमा रअणमुद्दिआ†।
[पुन: संस्कृतमाश्रित्य मुद्रिकां प्रति]

या शैशवावधि मनोरमरामचन्द्र-

हस्ताङ्गुलिप्रणयिनी सुभगा सुवृत्ता।

अद्यैव सा जनकराजसुता कथं नु

लङ्कामुपागतवती मणिमुद्रिकेयम्॥

[पुन: सादरं, कराङ्गुलिकिसलयेन लालयन्ती] अयि!

---

* कथं ममानुरोधेनाग्निरपि शीतल: संवृत्त:। अयेऽङ्गारखण्डकं न खल्वेतत्, अपि पुन: पद्मरागरत्नखण्डकम्।

† कथं सेयं रत्नमुद्रिका?

रअणङ्गुलीअ अवि दाव कुसलं सलक्खणाणं रामचन्दचल-णाणं *।

[पटाक्षेपेण प्रविश्य] हनूमान्। कुशलं देवि ! कुशलम्।

सीता। अमिअमुह कोसि तुमं †।

हनूमान्। ताराधतेरनुचरो रघुनन्दनस्य

दूतः स्थितोऽस्मि मरुतः प्रथितो हनूमान्।
त्वां हन्तुमुद्यतवतो दशकन्धरस्य
न्यस्तं करे निभृतमचगिरो मयैव॥

रामः। अहो ! कथमिदं हनूमन्नामधेयस्य महात्मनस्य विलसितमेतत् ?

लक्ष्मणः। अहो ! सचमत्कारता संविधानस्य।

सीता। अयि भद्दमुह को उण इमो तारावई ‡।

हनूमान्। यो वालिनः शौर्यनिधेरमित्रं

त्रैलोक्यवन्दीस्तपनस्य सूनुः।
रामस्य पादाब्जतलाभिवर्ती
सुग्रीवनामा कपिचक्रवर्ती॥

सीता। केण उण णरवाणराणं एरिसं सक्खित्तणं णिम्मि-दम् ¶।

---

* अये रत्नाङ्गुलीयक ! अपि तावत् कुशलं सलक्षणयो रामचन्द्रचरणयोः।

† अमृतमुख ! कोऽसि त्वम् ?

‡ अयि भद्रमुख ! कः पुनरयं तारापतिः ?

¶ केन पुनर्नरवानराणामीदृशं सख्यित्वं निर्मितम्।

हनूमान् । रामबाणेनैव ।

वालिने विसृजता धनुरङ्कं
नाकलोकललनाकुचकेलिः ।
तारया सममदीयत चास्मै
वानरेन्द्रपदवीमणिमौलिः ॥

सीता । कहेहि दाव अवि णाम मह मन्दभाइणीए किदे दुब्बलो दाणिं किंपि रहुणाहो * ।

हनूमान् । किमपीति किमुच्यते । इदानीं हि ।

बहुलपक्षशशीव दिनेदिने
रघुपतिः कृशतामुपयाति सः ।

सीता । हद्धिहद्धि † ।

हनूमान् । कुवलयप्रतिमद्युतिरस्य तु
प्रविकसत्यनुभाववशंवदा ॥

सीता । दाणीं किमपि उज्जीविदह्मि ‡ ।

हनूमान् । अयि देव्याकर्णय तावत् यत् संदिष्टं देवेन देव्याः ।

हिमांशुश्चण्डांशुर्नवजलधरो दावदहनः
सरिद्वीचीवातः कुपितफणिनिश्वासपवनः ।

---

* कथय तावत् अपि नाम मम मन्दभाग्यायाः कृते दुर्बल इदानीं किमपि रघुनाथः ?

† हा धिक् हा धिक् ।

‡ इदानीं किमपि उज्जीवितास्मि ?

नवा मल्ली भल्ली कुवलयवनं कुन्तगहनं
मम त्वद्विश्लेषात् सुमुखि! विपरीतं जगदिदम् ॥

अपिच। कस्याख्याय व्यतिकरमिमं मुक्तदुःखो भवेयं
को जानीते निभृतमुभयोरावयोः स्नेहसारम्।
जानात्येकं शशधरमुखि! प्रेमतत्त्वं मनो मे
त्वामेवैतत् चिरमनुगतं तत्प्रिये किं करोमि?

सीता। लज्जते।

त्रिजटा। सखि! त्वमपि रघुपतेः किमपि सन्देशं प्रत्यभिज्ञानं च समर्पय।

सीता। इमो मे पडिसन्देसो।

बहलगलन्तणअणजलणिब्भरपज्जाउलावि मह दिठ्ठी।
तुह सुहअ वअणससहरलावण्णरसं पिपासेदि * ॥

(चूडारत्नमाकृष्य हनूमतः करे समर्पयन्ती) अयि चूडारअण!

चिव्वालअ णिअमङ्गं रअणीअरदिट्ठिं सुपं सुलिअम्।
रहुवइपअणिम्मलणहरअणीअरजोह्लनीरणिअरम्मि † ॥

---

* अयं मे प्रतिसंदेशः—
बहलगलन्नयनजलनिर्भरपर्याकुलापि मम दृष्टिः।
तव सुभग! वदनशशधरलावण्यरसं पिपासति ॥

† अयि चूडारत्न!
अपि चालय निजमङ्गं रजनिकरदृष्टिपांशुपांशुलितम्।
रघुपतिपदनिर्मलनखरजनिकरज्योत्स्नीरनिकरे ॥

हनूमान्। देव्यनुजानीहि त्वरयति मां रामचन्द्रचरणदर्शनोत्कण्ठा।

सीता। सबाष्पगद्गदम्। अय्यकारणसिणिद्ध पडिगदे तुम्मि पुणोवि को मह कहिस्सदि रहुणाहस्स पउत्तिम्*।

हनूमान्। अयि देवि! दिष्ट्या स्मारितोऽस्मि। नन्विदं ते संदिष्टं देवेन देव्याः।

मा ताम्य तामरसपत्रविशालनेत्रे!
विख्याप्यते पुनरपि त्वयि मत्प्रवृत्तिः।
सौमित्रिकार्मुकगुणध्वनिभिर्गभीरै-
स्तैः किंच राक्षसवधूरुदितैरधीरैः॥

(नेपथ्ये) हत्वा कथं चिदपि राजकुमारमक्षं
रे वानरापसद! क्व पलायितोऽसि।
त्वां हन्तुमिच्छति दशाननशासनेन
दर्पोद्धतो धृतधनुर्नगु मेघनादः॥

हनूमान्। देवि! कृतकार्योऽस्मि तदस्मत्तः परमासाप-लापेन। तदिदं प्रणम्यसे आपृच्छ्यसे च।

सीता। अये पवणणंदण अणाआसेण इमं दुण्णिसा-अरसाअरं अदिक्कमेहि †।

हनूमान्। अयं मूर्ध्नि गृहीतो देव्याः प्रसादः।

इति निष्क्रान्तः।

* अय्यकारणस्निग्ध! प्रतिगते त्वयि पुनरपि को मम कथयिष्यति रघुनाथस्य प्रवृत्तिम्।

† अये! पवननन्दन! अनायासेनेमं दुर्निशाचरसागरमतिक्रमस्व

सीता। हला तिअडे खेअरी भविअ पेक्ख दाव इमस्स उत्तन्तम् * ।

त्रिजटा। तथेति निष्क्रान्ता। [ नेपथ्ये ]

बाणौघानेकवीरः कलयति च रुषा मेघनादेन मुक्तान्

[ सर्वे हर्षं नाटयन्ति ] [ नेपथ्ये ]

बद्धोऽयं राक्षसेन ज्वलदनलशिखादीप्तपुच्छः कृतश्च ।

[ सर्वे विषादं नाटयन्ति ] [ पुनर्नेपथ्ये ]

क्रामन्नट्टालिकानामुपरि कृतपदो दन्दहीत्येष लङ्कां

[ सर्वे हर्षविषादौ नाटयन्ति ] [ पुनर्नेपथ्ये ]

अक्लान्तोऽयं पयोधेः पयसि शमयति स्वाङ्गलग्न कृशानुम् ॥ [सर्वे हर्षं नाटयन्ति ]

[ पुनर्नेपथ्ये ] ! अहो आश्चर्यमाश्चर्यम् !

वेलाद्रेरस्य हेलाक्रमणपरिणतस्तुङ्गमाक्रम्य शृङ्गं
मौलिं पूर्वाचलस्य द्युमणिरिव नभो लङ्घयत्यम्बुराशिम्।
वेगप्रोद्भूतवातप्रतिहतसलिलोन्मुक्तगम्भीरगर्भ-
व्यक्तीभूतोरगेन्द्रस्तुतिगतविकसत्कीर्तिहारी हनूमान्॥

सीता। [ नेपथ्याभिमुखमवलोक्य ] हला तिअडे अवतिण्णासि महीअलं ता पिअंवदाए तुह आलिङ्गेमि अङ्गाइं †

इति निष्क्रान्ताः।

* हला ! त्रिजटे खेचरी भूत्वा प्रेक्षस्व तावदस्य वृत्तान्तम् ।

† हला त्रिजटे अवतीर्णासि महीतलं तत् प्रियंवदायास्तवालिङ्गाम्यङ्गानि ।

रामः । प्रिये ! मामपि प्रतीक्षस्व ।

लक्ष्मणः। आर्य! किमिदं लङ्कावृत्तान्तानुसारिणि विद्याधरप्रणीते महेन्द्रजाले पुनः सम्भ्रम्यते ?

रामः । तर्हि दिष्ट्यास्माभिर्निजविक्रमकथापराङ्मुखस्यापि हनूमतश्चरितरहस्यमाकलितम् ।

[ नेपथ्ये ] अये रघुनाथ ! अयमसौ—

दर्पोद्धतं दधिमुखं तरसा निपीड्य
पीत्वा चिरं मधुवने स्वरसं मधूनि ।
द्रष्टुं समेति भवतः पदपद्मलीलां
नीलाङ्गदप्रभृतिभिः सहितो हनूमान् ॥

रामः । वत्साकर्णितं तदागच्छ कृतकार्यं हनूमन्तं प्रत्युद्गच्छावः ।

इति निष्क्रान्ताः सर्वे ॥

॥ इति षष्ठोऽङ्कः ॥



## ॥ अथ सप्तमोऽङ्कः ॥

——:०:——

ततः प्रविशति पुलस्त्यशिष्यः ।

[ परितो विलोक्य ] अपरिशीलितसन्निवेशोऽस्मि, तत् कथं पृच्छामि तस्य भवनं ? [ पुनर्विलोक्य ] कथमयं लङ्केश्वरमहामन्त्रिणो माल्यवतः परिचारकः करालकः। [ उच्चैः ] सखे करालक ! इतइतः ।

[ प्रविश्य ] करालकः । मुने ! प्रणम्यसे ।

मुनिः । समीहितं लभस्व । कथय तावन् मे विभीषणस्य भवनम् ।

करालकः । किं तव ?

मुनिः । आदिष्टोऽस्मि भगवता पुलस्त्येन कमपि सन्देशमुपनेतुं पौत्रस्य ।

करालकः । न तावदिदानीमिह विभीषणः ।

मुनिः । कथय किमेतत् ?

करालकः । एकदाभिप्रणमतो विभीषणस्य करात् सकौतुकं लिखिताक्षरपङ्क्तिद्वयमेकं गृहीतं लङ्केश्वरेण वाचितं च ।

"उदर्कभूतिमिच्छद्भिः सद्भिः खलु न दृश्यते ।
चतुर्थीचन्द्रलेखेव परस्त्रीभालपट्टिका ।"

मुनिः । अहो ! प्रभुविप्रमिचातुरी बिभीषणस्य ।

करालकः । ततो विहस्यैकं लङ्केश्वरेणोक्तं नूनं केनापि भीरुणा भाषितमेतत् । ख्यातं हि यत् किल ।

"परस्त्रीकुचकुम्भेषु कुम्भेषु परदन्तिनाम् ।
निपतन्ति न भीरूणां दृष्टयः शरवृष्टयः ॥"

मुनिः । अहो ! निजचित्तवृत्तिभित्तिभूमिकानुसारीणि वाक्चित्राणि लोकस्य ।

करालकः । ततः प्रणयकोपविषादमिदमाह लङ्केश्वरं बिभीषणः—

"यस्य त्र्यम्बकमौलिखेलदमलस्वर्लोककल्लोलिनी-
लीलालङ्घनलम्पटेन यशसा दिग्भित्तयः क्षालिताः ।
सोऽपि त्वं जनकाधिराजतनयाबद्धाभिलाषः कथं
हा! जातोऽसि पुलस्त्यसन्ततियशःशीतद्युतेर्लाञ्छनम् ।"

मुनिः । [ सकौतुकम् ] ततस्ततः ।

करालकः । ततश्च । कोपपाटलितलोलदृष्टिना
किञ्चिदुन्नमितखड्गयष्टिना ।
रावणेन नयधर्मभूषणः
स्ताडितो हृदि पदा विभीषणः ॥

मुनिः । हन्त ! नूनम् ।

लङ्केश्वरेण दुष्टेन नयधर्मविभूषणः ।
बिभीषणस्य न परं विभवोऽपि पदा हतः ॥

ततस्ततः ।

करालकः। ततः कतिपयपरिवारेण लङ्केश्वरं विहाय राम एव समाश्रितः।

मुनिः। [स्वगतम्] अनुष्ठितं तर्हि पुलस्त्यसंदेशरहस्यं बिभीषणेन। [प्रकाशम्] भवान् पुनः किमधुना कर्तुकामः?

करालकः। अहमादिष्टोऽस्मि माल्यवता जानकीविरह-विह्वलहृदयस्य लङ्केश्वरस्य मनोविनोदनाय केनापि चित्र-करेण विरचितं चित्रमिदं दृग्गोचरीकरणीयमिति।

मुनिः। [विहस्य] कथमित्थमासन्नशत्रौ लङ्केश्वरेण तादृशस्य महामन्त्रिणो माल्यवत एवमुपचरितुमुचितं। तन्नूनं प्रस्तुतोचितमेव किमप्येतद्भविष्यति। [नेपथ्ये]

रेरे चन्दनमिन्दुमण्डलशिलापट्टे समुद्घृष्यतां
रेरे चामरमुज्ज्वलैः शशिकरैः श्वेतं विनिर्मीयताम्।
रेरे बालमृणालतन्तुलतिकासूत्रेण पाथोजिनी-
पत्रस्थैरुदबिन्दुभिर्मणिमयो हारः समासूत्र्यताम्॥

मुनिः। [सोपहासमात्मगतम्] यादृशोऽयं शीतोपचार-स्तादृश एव सोतोपचारो लङ्केश्वरस्य भविष्यतीति। [प्रकाशम्] कथमिदं विरहतप्तस्य दशकन्धरस्य शीतोपचारार्थमादिश्यन्ते निशाचराः?

करालकः। खेचराय। इदानीं हि—

अङ्गं लिम्पति चन्दनेन मृदुभिः शीतद्युतिः स्वैः करैः
किञ्चिच्चञ्चलतालवृन्तकलनव्यग्रो वसन्तानिलः।

किञ्चायं नलिनीदलैर्वितनुते तल्पं प्रतीचीपति-
र्देवैरित्थमनङ्गतप्तहृदयो लङ्केश्वरः सेव्यते ॥

मुनिः। [स्वगतम्] अये ! अलीकवागडम्बरं निशाचरस्य !

करालकः। [नेपथ्याभिमुखमवलोक्य] कथमयं प्रहस्तो राजद्वारमुपसर्पति ! तदस्य हस्ते चित्रपटमर्पयिष्ये। भवानपि समीहितं साधयतु।

इति निष्क्रान्तौ ॥

## ॥ विष्कम्भकः ॥

ततः प्रविशति रावणश्चित्रहस्तः प्रहस्तश्च।

रावणः। [स्वगतम्]

राजल्ललाटफलका कमनीयकूजत्-
काञ्चीगुणप्रणयिनी धृतकेशपाशा।
हा! किं करोमि मम सा हृदयं प्रविष्टा
नाराचयष्टिरिव पुष्पशिलीमुखस्य ॥

[विमृश्य] अहो! कथमद्यापि हठाहरणखिन्नां नितान्तक्षामधूसराङ्गीमपि जानकीं जनस्थानस्थितामिवाहमखण्डमण्डनां पश्यामि। अथवोचितमिदम्।

आचान्तकान्तिरुचिरैर्मयूखैरहिमत्विषः।
धूसरापि कला चान्द्री किं न बध्नाति लोचनम् ॥

प्रहस्तः। अयि देव! इदमालोक्यतां चित्तविनोदनं चित्रम्।

रावण: । किं पुनरिहालिखितम् ?

प्रहस्त: । अयं तावत् तरलतिमिनिकरकरालकल्लोलकोलाहलोज्जागर: सागर: ।

रावण: । [विलोक्य] किमिदमुत्तरेण तरङ्गमालिनममुतमालखण्डमाखण्डलधनु:सहस्रानुकारि कपिशयति गगनतलम् ?

प्रहस्त: । तदिदं सुग्रीवपालितं कपिकुलम् ।

रावण: । [विहस्य] अपि वालिपालितमिति वक्तव्यम् । भवतु किं पुनरनेन । कौ पुनरिमौ कार्मुकधरौ ?

प्रहस्त: । ताविमौ रामलक्ष्मणौ, ययोरग्रजस्य बाणपातविलसितेन सुग्रीवपालितमधुना कपिकुलम् ।

रावण. । [अनाकर्णितकेन] क: पुनरयं नितान्तकृशककमनीयतनुरमन्दमन्दराघातनिर्मन्थनोत्थिततरलतरङ्गदूरविक्षिप्तशङ्करशिर:शेखराधिरोहणकुतूहली कलानिधिरिव तरङ्गमालिनस्तटभुवमधिशेते ?

प्रहस्त: । स एव लङ्कागमनकुतूहली निजकुलगुरुं सागरमुपचरितुं कुशशयनविन्यस्तगात्र: प्रथमो दाशरथि: ।

रावण: । [विहस्य] कथमित्थमेव जानकीलाभकौतुकी सोऽयमस्मानप्युपचरिष्यति ?

प्रहस्त: । इतो विलोक्यतामयं रामनाराचनिर्मुक्तबहलानलहेलातरलदीनमीननिकरपरिवार: पारावार: ।

रावण:। कौ पुनरिमौ ज्येष्ठतापसस्य सादरं वानरवीरै: पार्श्वपरिसरमानीयेते ?

प्रहस्तः। अयं तावत् सागर एव। अयमपि देवस्य वि-
त्वर्धीक्ति—अथवा किमस्य बन्धुविरोधिनो नामग्रहणेन।

रावणः। कथमयं बिभीषणोऽस्मद्विरोधेन राममाश्रयति ?
भवतु।

निशाचरशिरोरत्नरञ्जिताङ्घ्रिशिरोरुहः।
प्रियोऽपि दशकण्ठस्य नैष दर्शनमेष्यति॥

रावणः। [सकौतुकम्] किं पुनरिदमक्षरपङ्क्तिद्वयम् ?

प्रहस्तकः। नूनमिदं समुद्रबिभीषणौ प्रति लक्ष्मणस्य
वचनद्वयं भविष्यति।

रावणः। एकं तावद् वाचय।

प्रहस्तकः। वाचयति—

"त्रासं मुञ्च समुद्र! कोपदहनो रामस्य पास्यत्ययं
बन्दीभूतसुरेन्द्रसुन्दरदृशामक्षीरमुद्रं पयः।
कामं ते मकरीगणो विहरतामेतस्य लङ्केश्वर-
स्त्रीगण्डस्थलपत्रभङ्गमकरीविध्वंसिनः साय

रावणः। अन्यदपि वाचय।

प्रहस्तः। वाचयति—

"अद्यैवास्य बिभीषणस्य शरणापन्नस्य मूर्द्धानते-
रानृण्यं विदधात्ययं रघुपतिर्लङ्काधिपत्यश्रियम्।
एतस्यैव भुजाविह प्रतिभुवौ सुग्रीवराज्यार्पण-
त्रैलोक्यप्रथमानसत्यचरितौ सर्वे वयं साक्षिणः॥"

रावणः। अहो! वागडम्बरैकसारता कनिष्ठतापसस्य।

भवतु, किं पुनरिदं मध्येसमुद्रमालोक्यते ?

प्रहस्तः । स एष कपिकुलोन्मूलितशैलशिखरनिर्मितः काकुत्स्थकुलकीर्तिप्रसक्तिप्रबन्धः सेतुबन्धः ।

रावणः । अहो! चित्रकरस्य चातुरी! यदलीकमपि सत्यमिव दर्शितवान् ।

प्रहस्तः । कथमद्याप्येदमलीकमिति संभावना देवस्य ?

[ नेपथ्ये ] कलकलः

रावणः । किमेतत् ?

प्रहस्तः । एषामयं रामचमूचराणां
दर्पोद्धतानां कपिकुञ्जराणाम् ।
नवोन्नतानामिव नीरदानां
कोलाहलः कोऽपि समुज्जिहीते ॥

प्रहस्तः । तदिदं शङ्कितव्यं प्रतिविधातव्यं वा ।

रावणः । आः ! किमिह शङ्कया प्रतिविधानेन वा ?

अपि नहि । कोलाहलेनोल्लसता कपीनां
मनो मदीयं मुदमेव धत्ते ।
मन्दोदरीभूषणनूपुराणां
महामणीनामिव शिञ्जितेन ॥

[प्रविश्य] मन्दोदरी । जेदु जेदु देवो *।

रावणः । देवि! इत आस्यताम् ।

मन्दोदरी । यथोचितमुपविश्याधोमुखी तिष्ठति ।

---

* जयतु जयतु देवः ।

रावणः । भुग्नालकं स्मितपराजितचन्द्रलेखं
दृग्लीलया कुवलयश्रियमादधानम् ।
एतन् मुखं त्रिदिवसुन्दरीणामिव दुर्निरीक्ष्यं
तन्वङ्गि ! मामिव मुधा किमधः करोषि ॥

प्रहस्तः । देव ! कपिसेनाकोलाहलचिन्तयैव नूनमधरीकृतमुखी देवीति तर्कयामि ।

रावणः । आः क एष चिन्ताविषयः ?

इयं लीलालोलाङ्गदभुजलता नीलचिकुरा
समुन्मीलत्तारा कुमुदहसिता चारुनयना ।
प्लवङ्गानां सेना युवतिरिव तारापतिमुखी
ममाग्रे कन्दर्पं प्रकटयितुमद्य प्रभवति ॥

मन्दोदरी । देव अण्णंपि अत्थि कारणं अज्ज हि मए देवस्स सउणणिरूवणत्थं गिरिसिहरगहणगब्भट्ठिदा सबरपल्लीं पट्ठाविदा णिअपरिआरिआ ताए अ कीएवि सबरकुडुम्बिणीए णिअघरपेरन्तवासिणं केसरिकिसोरअं उल्लावअन्तीए एरिसं वअणमाअण्णिदम्*—

मा होहि णाअवइणो परिहवभीत्तेण गब्भणिव्वूढो ।

* देव! अन्यदप्यस्ति कारणं, अद्य हि मया देवस्य शकुननिरूपणार्थं गिरिशिखरगहनगर्भस्थिता शबरपल्लीं प्रस्थापिता निजपरिचारिका तया च कस्या अपि शबरकुटुम्बिन्या निजगृहपर्यन्तवासिनं केसरिकिशोरकं लालयन्त्या ईदृशं वचनमाकर्णितम्—

वसुहमिमं गिरिसंकडं मइन्द सरहस्स णन्दणी पत्तो *

रावणः । किमिह विषादस्थानमस्मान् प्रतुदासीनमे-वैतत् ।

तथाहि—माभव नागपतेः परिभवमात्रेण गर्वनिर्व्यूढः ।
वसुधामिमां गिरिसङ्कटमयीं मृगेन्द्र शरभस्य नन्दनः प्राप्तः ॥

प्रहस्तः । देवान्यथा घटमानमिदम् ।

मा भव नागपतेः परिभवमात्रेण गर्वनिर्व्यूढः ।
वसुधामिमां गिरिसङ्कटमयीं दशरथस्य नन्दनः प्राप्तः

रावणः । आः! केयं निसर्गनिःशङ्के लङ्केश्वरे मयि प्रकुपोपश्रुतिपरीक्षा ।

(नेपथ्ये) हेलास्फालितरामलक्ष्मणधनुर्ज्यावल्लरीझल्लरी-
झङ्कारप्रसरप्ररूढपुलकाभोगभारनीरन्ध्रिताः ।
व्यावल्गत्कपिकण्ठकाण्डकदनक्रीडत्कृपाणोज्ज्वल-
स्फूर्जद्दोर्जयदोर्वलैकचपलाश्चरन्ति रात्रिचराः ॥

रावणः । (सहर्षम्) अये ! निशाचरवीरविजयोत्तरः समरः ।

(पुनर्नेपथ्ये) अग्रेसरी रघुपतेः परिणद्धपाक-
किम्पाकपाटलमुखी कपिवीरसेना ।
निःशेषमापिबति राक्षसवीरचक्रं ।
प्रातः प्रभेव तपनस्य तमिस्रजालम् ॥

* मा भव नागपतेः परिभवमात्रेण गर्वनिर्व्यूढः ।
वसुधामिमां गिरिसङ्कटां मृगेन्द्र शरभस्य नन्दनः प्राप्तः ॥

रावणः । आः ! कथमुत्कण्ठायितं मर्कटैः । (उच्चैः) कः कोऽत्र भोः ? मदाज्ञया—

कृत्वा विनिद्रमपनिद्रभुजावलेपः ।
प्रोद्दामरामसमराय स कुम्भकर्णः ।
आदिश्यतां निजभुजार्दितवज्रपाणि-
रद्यैव लक्ष्मणरणाय च मेघनादः ॥

(पुनर्नेपथ्ये) देव ! भवदाशयविदा महामन्त्रिणा माल्यवता पूर्वमेव संविहितमिदम् । इदानीं हि ।

रामेण सार्धमयमुद्धतबाहुदर्पः
संग्राममूर्ध्नि अधितिष्ठति कुम्भकर्णः ।
रक्षःशिखण्डिहृदयोत्सवमेघनादः
सौमित्रिणा रणमसावपि मेघनादः ॥

[पुनर्नेपथ्ये]

यद्दंष्ट्रावज्रवातैः समिति विदलिताः शैलकल्पाः कपीन्द्राः
यन्नाराचाम्बुवर्षैर्दवदहनसमाः शामिता वानरेन्द्राः ।
वीरोऽसौ कुम्भकर्णः स च समरजयाकाङ्क्षी मेघनादः
संजातौ—

रावणः । किमतःपरं वदिष्यति ? [पुनर्नेपथ्ये]

हा !—पतङ्गौ दशरथसुतयोर्दारुणे बाणवह्नौ ॥

[मन्दोदरीरावणौ मूर्च्छितः]

प्रहस्तकः । देव ! समाश्वसिहि समाश्वसिहि ।

रावणः । [समाश्वस्य] देवि ! समाश्वसिहि समाश्वसिहि ॥

मन्दोदरी। [समाश्वस्य] परित्ताअदु मं अज्जउत्तो एसा णिमग्गम्हि सोअतिमिरे *।

रावणः। अयमलं कातरतयायं चन्द्रहासचन्द्र एव शोकतिमिरादुद्धरिष्यति भवतीम्। [पुनरुत्थाय] खड्गमुद्यम्य पश्यायमसौ मे।

भिन्नप्रभिन्नसुरकुञ्जरकुम्भमुक्त-
मुक्ताफलप्रकरकैः कलिताधिवासः।
अद्यैव खेचरनिशाचरलोचनाना-
मुन्मीलयन् मुदमुदञ्चति चन्द्रहासः॥

इति प्रहस्तेन सह निष्क्रान्तः।

मन्दोदरी। अये! अच्छरिअं समरसंरम्भविलोअणविह्मअत्थिमिदमिदं विज्जाहरमिहुणं किम्पि मन्तेदि तेण हि अज्जउत्तस्स विजअत्थं अहंपि णिअकुलदेवदाओ अच्चिदुं गच्छम्हि †।

इति निष्क्रान्ता।

[ततः प्रविशति विद्याधरमिथुनम्]

विद्याधरी। अज्जउत्त को इमो रणरहसविअसन्तपुलअभरकुड्मलिदभुअवणो कविचमूचक्कमहिवट्टदि ‡।

* परित्रायस्व मामार्य्यपुत्र एषा निमग्नाऽस्मि शोकतिमिरे।

† अये! आश्चर्य्यं—समरसंरम्भविलोकनविस्मयस्तिमितमिदं विद्याधरमिथुनं किमपि मन्त्रयति। तेन हि आर्य्यपुत्रस्य विजयार्थमहमपि निजकुलदेवता अर्चितुं गच्छामि।

‡ आर्य्यपुत्र! कोऽयं रणरभसविलसत्पुलकभरकुड्मलितभुजवनः कपिचमूचक्रमभिवर्त्तते?

विद्याधरः । प्रिये! स एष रामसमरकौतुकी दधिमुखः ।

विद्याधरी । कोउण इमो अञ्जणपुञ्जच्छविसरीरो कविवीरो तस्स सम्मुहं पराबट्टदि * ।

विद्याधरः । प्रिये ! स एष विचित्रसमरशीलो नीलः । [विलोक्य, सविस्मयम्] अहो !

वक्षःस्थले झगिति नीलकरोज्झितेन
नीलाचलस्य शिखरेण कृतप्रहारः ।
लङ्केश्वरः स्मरति नूनमसौ वसन्त-
नीलोत्पलप्रहरणं हरिणेक्षणानाम् ॥

[पुनः सकौतुकं] पश्यपश्य —

नीलोऽयं दशमुखपाणिपङ्कजाना-
मङ्केषु भ्रमरतुलां भ्रमन् बिभर्ति ।
अप्येको दशसु किरीटपीठिकासु
द्राक् प्रेङ्खन्ननुभवतीन्द्रनीललीलाम् ॥

विद्याधरी । को उण इमो णिसाअरेन्द्रेण समं समरसाहसमङ्गीकरिअ चिठ्ठदि † ।

विद्याधरः । स एष स्वामिपक्षपाती बिभीषणः ।

विद्याधरः । [सविषादं] हन्त भोः !

येयं बिभीषणे शक्तिर्मुक्ता क्रूरेण रक्षसा ।

विद्याधरी । अह किं ताए ‡ ।

---

* कः पुनरयमञ्जनपुञ्जच्छविशरीरः कपिवीरस्तस्य सम्मुखं परापतति ?

† कः पुनरयं निशाचरेन्द्रेण समं समरसाहसमङ्गीकृत्य तिष्ठति ?,

‡ अथ किं तस्याः ?

विद्याधरः। लक्ष्मणेन गृहीतेयं प्रियेव निजवक्षसा॥

विद्याधरी। हद्धिहद्धि *।

विद्याधरः। वर्षन् नैव समन्ततो दशमुखं चापच्युतैः सायकैः
सौमित्रिं च विसंज्ञमङ्कनिहितं नेत्रच्युतैरम्बुभिः।
एतत् तर्कय हर्षशोकतरलाः कुर्वन् कपीनां दृशो
रामस्यामलकेलिवीरकरुणाव्यामिश्रतां गाहते॥

[विलोक्य] कथमपगत एव रामबाणपीडितो दशकण्ठः।

[नेपथ्ये] हा वत्स लक्ष्मण! विकासय नेत्रपद्मे
मागादिदं युगपदेव समस्तमस्तम्।
भाग्यं दिवाकरकुलस्य च जीवितं च
रामस्य किञ्च नयनाञ्जनमूर्मिलायाः॥

विद्याधरः। हन्त! सोऽयमनुजवत्सलस्य रामस्य विलापः।

[नेपथ्ये] देव! समाश्वसिहि समाश्वसिहि।

विद्याधरी। कहं सुग्गीवेण समासासीअदि रामचन्दो ता किं दाणीमालविस्सदि†।

विद्याधरः। आकर्णयामस्तावत् सुग्रीवेण समाश्वास्यमानः किमाह रामः।

[नेपथ्ये] सखे सुग्रीव! कथमाश्वास्यते?
अयि राघवाविति सुधामधुरं
विनिपीय पौरमुनिलोकवचः।

---

* हा धिक् हा धिक्।

† कथं सुग्रीवेण समाश्वास्यते रामचन्द्रस्तत् किमिदानीमालपिष्यति?

अयि राघवेति गरलप्रतिमं
कथमद्य रामहतकः पिबतु ॥

अपिच । कनीयस्या मातुः कृतचरणपातः कथमहं
सहिष्ये मत्पार्श्वे विफलपरिवर्तं नयनयोः ।
अये ! शान्तं पापं कठिन इव चेज्जीवितमना
विना वत्सं रामः पुनरयमयोध्यां प्रविशति ॥

विद्याधरः । अहह ! करुणैकार्णवो वर्तते । [विमृश्य] कः पुनरिह प्रतीकारः ? [विचिन्त्य] अथवा का प्रतीकारकथा ? वक्रो हि विधिः ।

विद्याधरी । वक्कदरोत्ति भणिअं । इदं पेक्ख णं इमो वाणरो जेव्व कोवि लङ्केसरकिदसंधाणो करकलिदसैलसिहरो रामसंमुहं जेव्व परिवट्टदि * ।

विद्याधरः । कर्णौ पिधाय शान्तं पापम् । अयि मुग्धे ! मैवं वादीः । अयं हि—

महौषधीनामाधारं भूधरं गन्धमादनम् ।
आदाय लक्ष्मणप्राणत्राणायाएति मारुतिः ॥

[पुनर्विलोक्य, सहर्षम् ]

आमोदमाघ्राय महौषधीनां
सौमित्रिरुन्मीलितपक्ष्मनेत्रः ।

---

* वक्रतर इति भणितव्यम् । इदं पश्य ननु अयं वानर एव कोऽपि लङ्केश्वरकृतसंधानः करकलितशैलशिखरी रामसंमुखमेव परिवर्तते ।

भूयोऽपि चक्रीकृतचारुचापः
करोति रामः परिपूर्णकामम् ॥

विद्याधरी। कहं पुणोवि रामरणकोदूहलफुल्लभुअमण्डली णिसाअराखण्डलो पराबडिदोजेव्व * ।

विद्याधरः। प्रिये! तदिदानीं सावधानं त्रिलोकयं तुलाधिरोहः खल्वयं वीरलक्ष्म्याः। यन्नाम रामरावणयोः समर इति।

विद्याधरी। कहं उण सअललोअवीरस्स रामचन्दस्स अनेकवीरपरिहूदस्स रावणस्स तुलाधिरोहो वीरलच्छीए हविस्सदि †।

विद्याधरः। प्रिये! न जानासि? कथं दशकण्ठं विना।
विन्यासं नाकनारीकुचकलशतटस्तम्भकुम्भस्य सकाला-
मस्पृष्टा मार्ष्टुमासीदसिरलहकलाकोविदः कोविदग्धः।
भिन्नस्वर्गैभकुम्भस्थलमहलगलन्मौक्तिकव्यक्तहासः
कस्याक्रीडत् करास्त्रिदशधनिवनध्वन्द्रहासचन्द्रहासः॥

अपिच। किं ब्रूमो दशकण्ठं निजभुजदृढाकपाटोभवद्
वक्षःपोठपतत्कठोरकुलिशव्राजेषु जातस्मितम्।
व्योमाभोगसरोजिनीकानिनि दशे यत्पाणिपङ्केरुहां
कैलासेन शिरःशिलीन्द्रकलिकोत्तंसेन हंसायितम्॥

---

* कथं पुनरपि रामरणकौतूहलफुल्लभुजमण्डली निशाचराखण्डलः परापतित एव।

† कथं पुनः सकललोकवीरस्य रामचन्द्रस्यानेकवीरपरिभूतस्य रावणस्य तुलाधिरोहो वीरलक्ष्म्या भविष्यति।

[नेपथ्ये] हेलोन्मूलितचन्द्रचूडगिरयस्त्रैलोक्यदत्तापदो
लङ्कातङ्कहराः पुनन्दरपुरस्त्रीवृन्दबन्दीकृतः ।
वैदेहीकुचकुम्भकुङ्कुमरसव्यासङ्गबद्धस्पृहाः
सीत्कण्ठं दशकन्धरस्य जयिनः खेलन्ति दोःकेलयः॥

[पुनर्नेपथ्ये]हेलोन्मूलितचन्द्रचूडधनुषस्त्रैलोक्यदत्ताभया
लङ्कातङ्ककराः पुरन्दरपुरस्त्रीवृन्दबन्दीमुचः ।
वैदेहीकुचकुम्भकुङ्कुमरसव्यामङ्गलब्धोत्सवाः
सीतकर्षं रघुनन्दनस्य जयिनः खेलन्ति दोःकेलयः॥

विद्याधरः। नूनमयं राक्षसवानरयोर्निजस्वामिवर्णनानुसारी व्याहारः ।

विद्याधरी । कहं उण रहट्ठिदेण रावणेन समं भूमिट्ठिदस्स राहवस्स समरो हविस्सदि* ।

विद्याधरः। प्रिये! पश्यानीत एव मातलिना पुरुहूतरथः अधिष्ठितश्च विनयाभिरामेण रामेण ।

[नेपथ्ये] अये ! कथम् ?

पूर्वमेव प्रयातानां खरमारीचवालिनाम् ।
सौजन्यमुग्धः पन्थानमधिवर्तितुमीहसे ॥

विद्याधरः । आकर्णयामस्तावदनेन रामवचनेन प्लोषितः किमाह रावणः ?

[नेपथ्ये] खरः कीदृक् वाली कपिरपि च मारीचहतकः
कुरङ्गस्तान् हत्वा कथमपि कथं दृप्यसि मनाक् ।

---

* कथं पुना रथस्थितेन रावणेन समं भूमिस्थितस्य राघवस्य समरो भविष्यति ?

अयं पश्य प्राप्तो दशवदननामा सुरपुरी-*
करीन्द्राणां हेलारचितकदनः पञ्चवदनः ॥

अथवा। कालीकेसरिकेसराञ्चलसटासाटोपसम्पादित-
क्रीडाचामरकोमलानिललवाचान्तश्रमाम्भःकणः।
श्रीमानेव दशाननो विजयते तस्यास्य पञ्चानन-
व्यापारप्रतिपादनैरपि यशः कीदृक् समुन्मीलति ॥

विद्याधरः। अये! दशवदनवचनकुपितः किमपि वक्तु-
काम इव लक्ष्यते लक्ष्मणः।

[ नेपथ्ये ] किं पञ्चाननतया दशाननतया वा? त्वमि-
दानीम्—

दूरोन्मुक्तमदो बिभीषण इव न्यञ्चच्छिरःशेखरः
स्वच्छन्दं चरणारविन्दयुगले रामस्य भृङ्गो भव।
रे नक्तञ्चर कुम्भकर्ण इव वा कर्णान्तचक्रीभव-
च्चापोत्सङ्गविमुक्तबाणदहने सद्यः पतङ्गो भव ॥

विद्याधरी। पेक्खपेक्ख इदो सरन्धआरं वित्थारअ-
न्तेण णिसामुहायिदं दसमुहेण*।

विद्याधरः। नन्वितस्तदेव निजविशिखधारया विनिवा-
रयता चन्द्रायितं रामचन्द्रेण। [पुनः सकौतुकम्] अये! नू-
मयं दिव्यास्त्रलीलया प्रतिहतदिव्यास्त्रं निकृत्तचापं रावणं
किमपि वक्तुकाम इव रामः।

[नेपथ्ये] निकृत्तचाप इति मा संक्षोभतरलो भव।

---

* पश्यपश्येतः शरान्धकारं विस्तारयता निशामुखायितं दशमुखेन।

अलमन्यदपि स्वैरं ननु रे समरे कुरु ॥

विद्याधरी। आकस्मियदु दाव किं दाणीं भणदि रावणो*।

[नेपथ्ये] आकर्णितस्तव दशानन ! बाहुदण्ड-
श्रीखण्डकाननफणी नवचन्द्रहासः ।
येन स्वनामभवसाम्यतयैव पीतः
स्वर्लोकलोलनयनामुखचन्द्रहासः ॥

विद्याधरः। लीलादलितचन्द्रहासः सोत्प्रासः किमधुना वदति रावणं रामचन्द्रः ।

[नेपथ्ये] अयि ! तावदधुना लङ्केश्वरः खिद्यति ।

विद्याधरी। किम्पि दाणीं जम्पिस्सदि रावणो† ।

[नेपथ्ये] कथमद्यैव लङ्केश्वरः खिद्यति । ननु रे !

विध्वस्ता दशभिर्भुजैर्दशदिशः प्रत्येकमेते पुन-
र्भारायैव दशापरे मम गिरिप्राग्भारभाजो भुजाः ।
आराध्यः शशिमौलिरम्बुधिजले निद्राति नारायणः
किंकर्तव्यतयानयानुदिवसं लङ्केश्वरः खिद्यति ॥

विद्याधरी। वअणमेत्तं दाणीं ‡ ।

विद्याधरः। नहि नहि । पश्यपश्य नन्वयमिदानीमपि ।

धनुर्निस्त्रिंशादिप्रहरणगणच्छेदकुपितो
दशास्यः स्वान् मूर्ध्नो रघुपतिशरश्रेणिदलितान् ।
करैरेकैर्नभसि भृशमादाय युगपत्

* आकर्णयतु तावत् किमिदानीं भणति रावणः ।

† किमपीदानीं जल्पिष्यति रावणः ? ‡ वचनमात्रमिदानीम् ।

चिपद्भिर्मुक्तैः सफलयति दीर्विंशतिमपि ॥

[पुनः सकौतुकम्]

एतान्यस्य यथायथा सुविशिखैः कृत्तानि रक्षःपते-
रुद्गच्छन्ति शिरांसि भीतिपुलकैः साकं दिवौकःपतेः ।
उन्मीलन्ति तथातथा रघुपतेरन्तः प्रमोदोर्मयः
कण्ठच्छेदविनोदकौतुकभरव्यग्रीभवच्चेतसः ॥

विद्याधरी । कहं अज्जवि णिसाअरिन्दबन्दीकिदसुरसुन्द-
रीणं दंसणं दुल्लहं जं दसस्स सीसाइं पुणोपुणोवि उम्मी-
लन्ति * ।

विद्याधरः । अलं तावेन क्रीडति खलु रामः सह राव-
णेन न पुनरद्यापि क्रुध्यति । [पुनर्विलोक्य]

[सकौतुकं] प्रिये ! पश्यपश्य—

अन्तः सान्द्रदशास्यहेमरशिरः शीतांशुलेखोल्लसत्
पीयूषद्रवशीकरव्यतिकरप्राग्भारभाजामिव ।
छिन्नानामपि रामचन्द्रविशिखैर्भूयः समुद्गच्छतां
कान्त्यैव निशाचरेन्द्रशिरसां कान्तिः समुज्जृम्भते ॥

[पुनः सकौतुकं, विहस्य] अहो ! अस्य चित्तवृत्तिः ।

अयं यावद्यावत् पृथुहृदयपीठी रघुपतिः
शिरश्छेदासक्तो न दशवदनस्य व्यथयति ।

---

* कथमद्यापि निशाचरेन्द्रबन्दीकृतसुरसुन्दरीणां दर्शनं दुर्लभं यद् दश शीर्षाणि पुनःपुनरपि उन्मीलन्ति ।

अयं तावत्तावद्दहति मुखैर्दशमुखः
किमेतस्मिन् देवी जनकपतिपुत्री निवसति ॥

[नेपथ्ये] अयि प्रिय राम !
किं क्रीडसि शरस्तोमैरनेकेनैव पत्रिणा ।
परिपूरय नः कामं यशसा च जगत्त्रयम् ॥

विद्याधरः । नूनममी दिवौकसस्त्वरयन्ति रामचन्द्रं तच्छृणवत् किमधुना वक्ष्यति रावणः ।

[नेपथ्ये] रेरे मम भुजाः !

मुक्त्वा हरशेखरप्रणयिनीं पीयूषभानोः कलां
दिक्पालावलिमौलिमण्डनमणीन् गृह्णीत सर्वानपि
तैः काञ्चीं रचितां चिराय वहतु श्रोणीतटे जानकी
गायन्ती कमनीयशिञ्जितभरैर्मद्विक्रमाडम्बरम् ॥

विद्याधरः । [विहस्य] लङ्केश्वर! समयज्ञोऽसि यद् भुजामेव नियुक्तवानसि अधुना हि भुजमण्डलमेव परिवारवर्गस्ते । [विलोक्य, साकूतम्] अये! कथमनेन दशानन वचनेन किञ्चित् कुपित इव दृश्यते जानकीकान्तः ?

[पुनः सहर्षविषादं] हन्त भोः !

विकचकुसुमस्तोमाकीर्णैः परागविभूषितः ।
शशिमणिशिलातल्पेऽनल्पे सलीलमशेत यः !
अयमयमसौ रोषारूढे क्षणं रघुनन्दने
भुवि दशमुखः शेते धूलिच्छटापरिधूसरः ॥

विद्याधरी । (सहर्षम्) ता दाणीं जेव्व जअणणन्दिणी रामचन्देण समं सङ्गमिस्सदि * ।

विद्याधरः । अथ किम् ?

उद्दामहेतिवलयैः परिदीपिताशम्
पश्य प्रविश्य जनकेन्द्रसुता हुताशम् ।
प्रत्युद्गता समधिकां द्युतिमावहन्ती
प्रातर्मयूखकलिकेव दिवाकरस्य ॥

विद्याधरी । पेक्ख पेक्ख इमो अत्तमत्तमरकअत्थिदं पदेसं अवतरइ रामचन्दो † ।

विद्याधरः । तदेहि कार्यान्तरं पुलोमजायै निवेदयावः ।

इति निष्क्रान्तौ ।

ततः प्रविशति रामः । सीतालक्ष्मणौ सुग्रीवविभीषणौ च । अये ! कथमुपगत एव भगवानम्बरमणिश्चरमाचलचूडम् ।

लक्ष्मणः । पश्चिमपयोधिवेलां च । नन्विदानीम्—

उद्दामदिग्द्विरदचञ्चलकर्णपूर
गण्डस्थलीस्खलदलिस्तवकाळतीनि ।
मौलब्जभासिमृगनाभिसमानभासि
दिक्कन्दरेषु विलसन्तितमां तमांसि ॥

रामः । अये ! कथमुज्जृम्भितमेव निशाचरचक्रानुकारिणा तिमिरनिकरेण?

* तदिदानीमेव जनकनन्दिनी रामचन्द्रेण समं सङ्गमिष्यति ।

† पश्य पश्यायमत्तमत्तमरकतर्चितं प्रदेशमवतरति रामचन्द्रः ।

विभीषणः । नन्वितोऽपि समुन्मीलितमिव रामनाराचानुकारिणा तुहिनकरकिरणप्रकरेण ।

सुग्रीवः । एवमेतत् । अमी हि—

क्षीराब्धेर्लहरीषु फेनधवलाश्चन्द्रोपलेषु स्रवत्-
पाथःशीकरिणो विकासिकुमुदक्रोडे रजःपिञ्जराः ।
उन्मीलन्ति चकोरचञ्चुगहने छिन्नप्ररूढाश्वमत्-
कुर्वन्तः प्रियविप्रयुक्तरमणीगात्रे सुधांशोः कराः ॥

विभीषणः । एवमेतत् । इदानीं हि—

शक्रराशितनुबद्धभावतो-
कुङ्कुमाक्तकुचकोरकाकृतिः ।
स्पृशति कमलिनीभिरुन्नमत्-
पद्मकोशकरलीलया शशी ॥

लक्ष्मणः । सकौतुकमेवमेतत् । अहो ?

ध्वान्तौघे क्षितिकण्टके गतमहसि प्राप्ते प्रतीचीमयम्
प्राचीमञ्चति किञ्च दुग्धलहरीमुग्धे विधोर्धामनि
एतत् कोकचकोरशोकरभसम्लानप्रसन्नोल्लसत्-
दृक्पातोर्मिकदम्बचुम्बितमिव त्रैलोक्यमाभासते ॥

रामः । वत्सैवमेतत् । इदानीं हि—

शीतांशुस्फटिकालवालवलयद्रागुल्लसत्कौमुदी-
वल्लीनूतनपल्लवाञ्चितमिव प्राप्य क्षणं ताम्रताम् ।
चञ्चन्मत्तचकोरचञ्चुघटनाच्छिन्नाग्रकाण्डस्रुत-
क्षीरस्यन्दनिरन्तरप्लुतमिव श्वेतं वियद्भासते ॥

[ पुनर्विलोक्य, सकौतुकं ] वत्स लक्ष्मण !

पश्योदेति वियोगिनां दिनमणिः शृङ्गारदीक्षामणिः
प्रौढानङ्गभुजङ्गमस्तकमणिश्चण्डीशचूडामणिः ।
तारामौक्तिकहारनायकमणिः कन्दर्पसीमन्तिनी-
काञ्चीमध्यमणिश्चकोरपरिषच्चिन्तामणिश्चन्द्रमाः ॥

लक्ष्मणः । एवमेतत् । अयमसौ——

स्वैरं कैरवकोरकान् विदलयन् यूनां मनः खेदयन्
अम्भोजानि निमीलयन् मृगदृशां मानं समुन्मीलयन् ।
ज्योत्स्नां कन्दलयन् दिशो धवलयन्नुद्वेलयन् वारिधीन्
कोकानाकुलयन् तमः कवलयन्निन्दुः समुज्जृम्भते ॥

विभीषणः । सखे सुग्रीव ! पश्य—

मयूखनखरत्रुटत्तिमिरकुम्भिकुम्भस्थलो-
च्छलत्तरलतारकाकपटकीर्णमुक्तागणः ।
पुरन्दरहरिद्दरीकुहरगर्भसुप्तोत्थित-
स्तुषारकरकेसरी गगनकाननं गाहते ॥

सुग्रीवः । सखे विभीषण ! पश्य—

यः श्रीखण्डतमालपत्रति दिशः प्राच्याः स्मरस्थापतेः
पाण्डुच्छत्रति दन्तपत्रति वियल्लक्ष्मीकुरङ्गीदृशः ।
केलिश्वेतसहस्रपत्रति रतेः किञ्च क्षपायोषितः
क्रीडाराजतसीधुपात्रति शशी सोऽयं जगन्नेत्रति ॥

रामः । [निर्वर्ण्य]

सितकिरणकपोलीमालिमालोकयन्ती

तिमिरविरहतापव्याकुलां व्योमलक्ष्मीम् ।
रजनिरमलताराशीकरैः सिक्तमस्याः
परिमलयति गात्रं चन्द्रिकाचन्दनेन ॥

[पुनर्विमृश्य, स्वगतम्]

इन्दुरिन्दुरिति किं दुराशया
बिन्दुरेष पयसो विलोक्यते ।
नन्विदं विजयते मृगीदृशः
श्यामकोमलकपोलमाननम् ॥

[ पुनः सीतां प्रत्यपवार्य ]

तन्वि ! त्वद्वदनस्य विभ्रमलवं लावण्यवारांनिधे-
रिन्दुः सुन्दरि दुग्धसिन्धुलहरीबिन्दुः कथं विन्दतु ।
उत्कल्लोलविलोचने क्षणमयं शीतांशुरालम्बता-
मुन्मीलन्नवनीलनीरजवनीविलम्बरालश्रियम् ॥

सीता । [लज्जां नाटयति । विलोक्य सहर्षम्] अहो ! क-
हमिमो उम्मीलिदो जेव्व * ।

मउलीकिदारविन्दो माणवइमाणवारणमइन्दो ।
तिहुअणणअणारविन्दो रअणीमुहचन्दणो चन्दो ॥

रामः । सखे सुग्रीव ! पश्य पश्य—

इन्दोरस्य त्रियामायुवतिकुचतटीचन्दनस्थासकस्य ।
व्योमश्रीचामरस्य त्रिपुरहरजटावल्लरीकोरकस्य ।

* कथमयमुन्मीलित एव ?
मुकुलीकृतारविन्दो मानवतीमानवारणमृगेन्द्रः ।
त्रिभुवननयनारविन्दो रजनीमुखचन्दनश्चन्द्रः ॥

कन्दर्पक्षोणिपालस्फटिकमणिगृहस्यैतदाखण्डलाशा-
नासामुक्ताफलस्य स्थगयति जगतीं कोऽपि भासां विलासः॥

सुग्रीवः। अये रघुनाथ! पुनरुक्तमिदमाचष्टे। चन्द्रमसः किरणविलासः।

रामः। कथमिव?

सुग्रीवः। नन्वतएव—

कर्पूरादपि कैरवादपि दलत्कुन्दादपि स्वर्णदी-
कल्लोलादपि केतकादपि चलत्कान्तादृगन्तादपि।
दूरोन्मुक्तकलङ्कपङ्कशिरःशीतांशुखण्डादपि
श्वेताभिस्तव कीर्तिभिर्धवलिता ससार्णवा मेदिनी॥

रामः। अलं तुच्छप्रायजल्पितेन।

विभीषणः। देव! तुच्छप्रायमेव जल्पितं सुग्रीवेण यदुक्तं मेदिनीधवलितेति। ननु त्रिलोकीतलमेव धवलितमिति वक्तव्यम्। संप्रति हि—

समुन्नतवनस्तनस्तबकचुम्बितुम्बीफल-
क्वणन्मधुरवीणया विबुधलोकवामभ्रुवा।
त्वदीयमुपगीयते हरकिरीटकोटिस्फुरत्-
तुषारकरकन्दलीकिरणपूरगौरं यशः॥

रामः। अयि लङ्केश्वर! भवानपि किष्किन्धानाथमतमेवानुगतः। [पुनर्विलोक्य सहर्षं सुग्रीवं प्रति]

संरम्भोद्दितानङ्गसमयदशमुखोच्चण्डदोर्दण्ड-
कैलासः समस्तलोकीजयमुदितमनस्काऽसे?

सीताश्रीगण्डपालीलवणिमजलधेरुन्नतः फेनपिण्डः
पश्य व्योमावकाशं विशति विरहिणां दत्तशङ्कः शशाङ्कः ॥

[निर्वर्ण्य, स्वगतम्]

अयं नेत्रादत्रेरजनि रजनीवल्लभ इति
भ्रमः कोऽयं प्रज्ञापरिचयपराधीनमनसाम् ।
सुधानामाधारः स खलु रतिबिम्बाधरसुधा-
रसासिक्तस्निग्धादजनि नयनात् पुष्पधनुषः ॥

लक्ष्मणः । आर्ये जानकि ! पश्यपश्य—

आनन्दं कुमुदादीनामिन्दुः कन्दलयन्नयम् ।
लङ्घयत्यम्बराभोगं हनूमानिव सागरम् ॥

सीता । अये ! सुलक्खण लक्खण सो उण दाणीं कहिं रहुउलकुडुम्बसन्तावसमणचन्दणो पवणणन्दणो * ।

लक्ष्मणः । आर्ये ! स एष रामचन्द्रेण बन्धुमानन्दितुमयोध्यायां प्रहितः ।

सीता । ता अम्हेहिं किंति विलम्बीअदि † ।

रामः । [विभीषणमुखमालोकते]

विभीषणः । [निर्गत्य प्रविश्य च] इदं तत् पुष्पकाभिधानं विमानरत्नमारुह्यताम् ।

सर्वे विमानावरोहणं नाटयन्ति ।

---

* हे सुलक्षण लक्ष्मण ! स पुनरिदानीं क रघुकुल-कुटुम्ब-सन्ताप-शमन-चन्दनः

रामः । [सकौतुकम्] अये ! तदिदं विमानरत्नं यत् किल त्रिभुवनैकवीरः कुबेरानुजः कुबेरादाजहार ।

लक्ष्मणः । [सामर्षम्] कथमयं किष्किन्धामाहिष्मतीपतिभ्यां समभागविभक्तलक्ष्मीकोऽपि त्रिभुवनैकवीर इति व्यपदिश्यते ?

रामः । [विहस्य] वत्सैवमेतत् ।

तादृक्कठोरभुजयन्त्रनिपीडनेन
निःशब्दतामुपगतैर्दशकण्ठकण्ठैः ।
यत्कीर्तिघोषणमकारि चतुःसमुद्र-
वेलासु किं स वचसां विषयः कपीन्द्रः ॥

अपि च । कोपप्रदीप्तनिजलोचनदीपवह्नि-
निर्भिन्नसान्द्रतिमिरे स दशाननोऽपि ।
काराकुटीरकुहरे वसतिश्च यस्य
सोऽप्येष हैहयपतिर्विषयो न वाचाम् ॥

किन्तु परिभावय वत्स !

यस्य द्राक्करवालकृत्तशिरसः कण्ठालवालस्थलीं
चूडाचन्द्रमसं निपीड्य निबिडं सिञ्चन् सुधानिर्झरैः ।
स्वां मेने दशखण्डमण्डन इति ख्यातिं कृतार्थां हरः
पन्थानं दशकन्धरः स च कथंकारं गिरां गाहते ॥

[निर्वर्ण्य] अये ! किमुच्यतेऽस्य खलु त्रिकूट-
कण्ठीरवस्य दशकण्ठस्य लोकोत्तराशिरःश्रियं ?

यष्टीः शाखिनि चन्द्रशेखरगिरौ भारावतारोन्नम-
न्नागाधीशफणावलीमणिरुचां पूरे समुन्मीलति ।
जातास्तुत्र्यमकालबालतपनाताम्राश्चतस्रो दिशो
देवस्यापि रुषा तुषारकिरणोत्तंसस्य तिस्रो दृशः ॥

लक्ष्मणः । आर्य ?

एष मे मनसि भासतेऽधुना
मूर्तिमानिव मनोरथो रथः ।
नास्ति नो यदधिरोहलीलया
दूरमागतवतामपि श्रमः ॥

रामः । एवमेतत् । तथाहि—

उल्लङ्घ्य नीरधिमतीत्य च दण्डकानि
नद्यौ च मेकलकलिन्दसुते व्यतीत्य ।
प्राप्ताः शिखण्डिशतखण्डितशाखिखण्ड-
मेते वयं शिखरिणं ननु चित्रकूटम् ॥

सीता । [ तिर्यग्विलोक्य ] अहह ! कलिन्दणन्दिणि सञ्चप्पसादासि जं पुणोवि णिअकुडुम्बस्स दिसादंसणासि *

रामः । अयि ! तदिदं निर्मुक्तविरोधश्वापदं भगवतो भारद्वाजस्याश्रमपदम् ।

लक्ष्मणः । एवमेतत् । अत्र हि—

व्याजृम्भमाणवदनस्य हरेः करेण

---

* कलिन्दनन्दिनि ! सत्यप्रसादासि यत् पुनरपि निजकुटुम्बस्य दत-

कर्षन्ति केसरसटाः कलभाः क्षितीशे ।
अन्ये च केसरिकिशोरकपोतमुक्तं
दुग्धं मृगेन्द्रवनितास्तनजं पिबन्ति ॥

अपि च । क्रोडस्यायकाङ्क्षिताडनगतैरुस्थागरस्य च यं
शार्दूलस्य नखाङ्कुरेषु कुरुते कण्डूविनोदं मृगः ।
चञ्चच्चन्द्रशिखण्डितुण्डघटनानिर्मोकनिर्मोचितः
किञ्चायं पिबति प्रसुप्तनकुलश्वासानिलं पन्नगः ॥

रामः । अये ! कथमयं संप्राप्त एव चक्रवाकरमणीसंर-
म्भसमयः प्रभातसमयः ! तथाहि—

एते केतकधूलिधूसररुचः शीतद्युतेरंशवः
शान्ताः संप्रति पश्चिमस्य जलधेस्तीरं जराजर्जराः ।
अप्येते विकसत्सरोरुहवनीदृक्पातसम्भाविताः
प्राचीरागमुदीरयन्ति तरणेस्तारुण्यभाजः कराः ॥

लक्ष्मणः । [सकौतुकम्]

सद्यः सङ्घटमानकोकमिथुनव्याजेन पीनस्तन
द्वन्द्वं व्यञ्जितयौवनोज्ज्वलरुचो निर्माय दिक्कन्यकाः ।
दुर्दैवाक्षरमालिकामिव झटित्याकृष्य भृङ्गावलीं
लक्ष्मीमम्बुजिनीजनस्य तनुते देवस्त्विषामीश्वरः ॥

सुग्रीवः । विभीषण ! पश्यपश्य—

उन्मीलन्ति निशानिशाचरवधूप्रोच्चाटमामान्त्रिकाः
सायं सालसमुप्तपङ्कजवनप्रोद्बोधवैतालिकाः ।
फुल्लत्पङ्कजकोशगर्भकुहरप्रोद्भूतभृ-
ङ्गारप्रणवोपदेशगुरवस्त्वम्भोयांशवे ?

विभीषणः । एवमेतत् । तथाहि—

आयान्त्या दिवसश्रियः पदतलस्पर्शानुभावादिव
व्योमाशोकतरोर्नवीनकलिकागुच्छः समुज्जृम्भते ।
आतन्वन्नवतंसविभ्रममसावाशाकुरङ्गीदृशा-
मुन्मीलत्तरुणप्रभाकरकरस्तोमः समुल्लासते ॥

रामः । प्रिये !

एतत् तर्कय चक्रवाकसुदृशामाश्वासनादायिनः
प्रौढध्वान्तपयोधिमग्नजगतीदत्तावलम्बोत्सवाः ।
दीप्तांशोर्विकसन्ति दिङ्मृगदृशां काश्मीरपङ्कोदक-
व्यात्युक्षीचतुराः सरोरुहवनश्रीकेलिकाराः कराः ॥

[अपवार्य] पश्यपश्य—

शिथिलयति सरागो यावदर्को नलिन्याः
कमलमुकुलनीवीग्रन्थिमुद्रां करेण ।
प्रविकसदलिमाला गुञ्जितैर्मञ्जुशब्दा
जनयति मुदमुच्चैः कामिनां कामिनीव ॥

सीता । [विहस्य विलोक्य च] कहं इमो उम्मीलिदो जेव्व पुव्वगिरिपोम्मरायो पअडीकिदणअणग्गीअलसहाओ । कुङ्कुमकिअङ्गराओ नलिणीजणवल्लहो देवो * ॥

रामः । [प्रकाशम्] अयि जानकि ! पश्य—

तरलतरतरङ्गभङ्गहेला-
बहलविलासविलोलहंसमाला ।

अमरपुरतरङ्गिणीयमम्बा
सुरनरमङ्गलकारिणी न दूरे ॥

सीता। सहर्षं तदेव पठति संस्कृतं प्राकृतञ्च। राम:। [सहर्षं] वत्स लक्ष्मण ! इयम् रे रघुकुलमङ्गलप्ररोहकेदारधरणीतरङ्गिणी सरयू:। इयं च सरयूतरङ्गशीकरशीतलीकृतपरिसरा नगरीसीमन्तमणिरयोध्या।

लक्ष्मण:। [सहर्षम्] अयमसौ भरतानुयातस्त्वदभिषेककृतमतिर्भगवानरुन्धतीपति:।

दिलीपकुलमाणिक्यं सकलाशाविकासकम्।
आविर्भवन्तं भास्वन्तं भवन्तं संप्रतीक्षते ॥

तेन पुष्पकादवतराम:।

राम:। वत्स! प्रतीक्षस्वेहैव तावत् सुलभसकलमण्डलालीकमाखण्डलाशामण्डनं भगवन्तं चण्डमरीचिं नमस्याम:। [अञ्जलिं बद्ध्वा]

प्राचीकुङ्कुमतिलकं पूर्वाचलरोहणैकमाणिक्यम्।
त्रिभुवनगृहैकदीपं वन्दे लोकैकलोचनं देवम् ॥

[नेपथ्ये] अये वत्स रामभद्र ?

राम:। अहो ! अद्भुतम्।

विकासयन्ती नितरां पद्मानीव मनांसि न:।
अभेव भारती कापि भानुबिम्बाद्विजृम्भते ॥

[नेपथ्ये] यश: पूरं दूरं तनु सुतनुनेत्रोत्पलवनी-
तमस्तन्द्राचन्द्रातप तपसहस्राणि शरदाम्।
इयं वार्त्ता युष्मद्गुणकथनपीयूषपटल-
श्रितोत्सङ्गानन्दत्सुरनरभुजङ्गा त्रिजगती।

राम:। अनुगृहीतोऽस्मि।

[पुनर्नेपथ्ये] अन्यच्च ते किमाशास्महे ?

सुग्रीवः। अये तात दिनकर! परिपूर्णमनोरथ एव राम-
भद्रः। अनेन हि—

प्राप्ता निर्भरमुन्नतिर्निजगुणैराज्ञा पितुः पालिता
सुग्रीवश्च विभीषणश्च परमां राज्यश्रियं प्रापितौ।
सङ्ग्रामे दशकन्धरः सुररिपुर्नीतो यशःशेषतां
दृष्टो बन्धुजनश्च हर्षविगलद्वाष्पोल्लसल्लोचनः॥

तथापीदमस्तु—

अश्रालादिदमाम्बुजे तनुभृतां सारस्वतं जृम्भतां
देवे कौस्तुभधाम्नि चन्द्रमुकुटेऽद्वैता मतिः खेलतु।
वाग्देव्या सह मुक्तवैरसरसा देवी च दीव्यादियं
शेषस्येव फणाग्रलेषु सततं लक्ष्मीः सतां सद्मसु॥

रामः। तदागच्छत पुष्पकादवतीर्य गुरुं बन्धुजनं पौरां

[ सर्वे पुष्पकादवतरन्ति ]

जायन्तामविरामरामचरितक्रीडाभिरामाः सता-
मुन्मीलन्नवमालिकाविरचितस्रग्दामरम्या गिरः।
याः कण्ठेऽपि निवेश्य पेशलधियो रोमाञ्चलीलाञ्चिताः
कान्ताबाहुलताविलासमहिमाश्लेषान् तृणं मन्वते॥

इति निष्क्रान्ताः सर्वे।

इति श्रीजयदेव-विरचिते "प्रसन्नराघव"-नाम्नि नाटके सप्तमोऽङ्कः समाप्तः॥

॥ समाप्तोऽयं ग्रन्थः॥



| | | | |
|---|---|---|---|
| २४ | कुमारसम्भव—उत्तरखण्ड | ... | ॥ |
| २५ | अष्टकम् पाणिनीयम् | ... | ॥। |
| २६ | वाचस्पत्यम् [संस्कृत-बृहदभिधान] | ... | ६० |
| २७ | कादम्बरी—सटीक | ... | ४ |
| २८ | राजप्रशस्ति | ... | = |
| २९ | अनुमानचिन्तामणि तथा अनुमानदीधिति | | ४ |
| ३० | सर्वदर्शनसंग्रह | ... | २ |
| ३१ | भामिनीविलास—सटीक | ... | १ |
| ३२ | हितोपदेश—सटीक | ... | १ |
| ३३ | भाषापरिच्छेद मुक्तावलीसहित | ... | १ |
| ३४ | बहुविवाहवाद | ... | । |
| ३५ | दशकुमारचरित—सटीक | ... | १॥ |
| ३६ | परिभाषेन्दुशेखर | ... | १॥ |
| ३७ | कविकल्पद्रुम (वोपदेवकृत धातुपाठ) | ... | ॥ |
| ३८ | चक्रदत्त (वैद्यक) | ... | २॥ |
| ३९ | उणादिसूत्र—सटीक | ... | २ |
| ४० | मेदिनी कोष | ... | २॥ |
| ४१ | पञ्चतन्त्रम् [श्रीविष्णु-शर्म्म-सङ्कलितम्] | ... | २॥ |
| ४२ | विद्वन्मोदतरङ्गिणी (चम्पूकाव्य) | ... | ॥ |
| ४३ | माधवचम्पू | ... | ।= |
| ४४ | तर्कसंग्रह (इंराजी अनुवाद सहित) | ... | ॥ |
| ४५ | प्रसन्नराघवनाटक (श्रीजयदेवकविरचित) | | १॥ |
| ४६ | विवेकचूड़ामणि [श्रीमत्शङ्कराचार्य्य विरचित] | | ।= |
| ४७ | काव्यसंग्रह [सम्पूर्ण] | ... | ५ |
| ४८ | लिङ्गानुशासन (सटीक) | ... | । |
| ४९ | ऋतुसंहार—सटीक | ... | ।= |